**शकारः**—भावे भावे, मणुश्शे मणुश्शे । (क)

**विदूषकः**—जुत्तं णेदम्, सरिसं णेदम्, जं अज्जचारुदत्तस्स दलिद्ददाए संपदं परपुरिसा गेहं पविशन्ति । (ख)

**रदनिका**—अज्ज मित्तेअ, पेक्ख मे परिहवम् । (ग)

**विदूषकः**—किं तव परिहवो । आदु अम्हाणम् । (घ)

**रदनिका**—णं तुम्हाणं ज्जेव । (ङ)

**विदूषकः**—किं एसो बलक्कारो । (च)

**रदनिका**—अध इं । (छ)

**विदूषकः**—सच्चम् । (ज)

**रदनिका**—सच्चम् । (झ)

**विदूषकः**—(सक्रोधं दण्डकाष्ठमुद्यम्य ।) मा दाव । भो, सके गेहे कुक्कुरो वि दाव चण्डो भोदि, किं उण अहं बम्हणो । ता एदिणा अम्हारिसजणभाअधेअकुडिलेण दण्डकट्ठेण दुट्टस्स विअ सुक्खाण-वेणुअस्स मत्थअं दे पहारेहिं कुट्टइस्सम् । (ञ)

---

(क) भाव भाव, मनुष्यो मनुष्यः ।

(ख) युक्तं नेदम्, सदृशं नेदम्, यदार्यचारुदत्तस्य दरिद्रतया सांप्रतं परपुरुषा गेहं प्रविशन्ति ।

(ग) आर्य मैत्रेय, प्रेक्षस्व मे परिभवम् ।

(घ) किं तव परिभवः । अथवास्माकम् ।

(ङ) ननु युष्माकमेव ।

(च) किमेष बलात्कारः ।

(छ) अथ किम् ।

(ज) सत्यम् ।

(झ) सत्यम् ।

(ञ) मा तावत् । भोः, स्वके गेहे कुक्कुरोऽपि तावच्चण्डो भवति, किं

---

प्रकम्पते प्रदीपः ॥ जुत्तं णेदम् । नः काकौ । सदृशं नेदम् । संपदं सांप्रतम् ॥ किं एसो । किं प्रश्ने । किमेष बलात्कारः ॥ मा तावत् । स्वकीयगृहसमीपे कुक्कुरोऽपि बलीयान्भवति । ता ततः । एतेनास्मादृशजनभागधेयवक्रेण दण्डकाष्ठेन दुष्टस्येव । कृतद्वेषस्य वैरिणो महादुष्टस्यानिग्रहेऽपि ममापराधो

**विटः**—महाब्राह्मण, मर्षय मर्षय ।

**विदूषकः**—(विटं दृष्ट्वा ।) ण एत्थ एसो अवरज्झदि । (शकारं दृष्ट्वा ।) एसो क्खु एत्थ अवरज्झदि । अरे रे राअसालअ संट्ठाणअ दुज्जण दुम्मणुस्स, जुत्तं णेदम् । जइ वि णाम तत्तभवं अज्जचारुदत्तो दलिद्दो संवुत्तो, ता किं तस्स गुणेहिं ण अलंकिदा उज्जइणी । जेण तस्स गेहं पविसिअ परिअणस्स ईरिसो उवमद्दो करीअदि ।

मा दुग्गदोत्ति परिहवो णत्थि कअन्तस्स दुग्गदो णाम ।
चारित्तेण विहीणो अड्ढो वि अ दुग्गदो होइ ॥ ४३ ॥ (क)

**विटः**—(सवैलक्ष्यम् ।) महाब्राह्मण, मर्षय मर्षय । अन्यजनशङ्कया खल्विदमनुष्ठितम्, न दर्पात् । पश्य ।

सकामान्विष्यतेऽस्माभिः

---

पुनरहं ब्राह्मणः । तदेतेनास्मादृशजनभागधेयकुटिलेन दण्डकाष्ठेन दुष्टस्येव शुष्कवेणुकस्य मस्तकं ते प्रहारैः कुट्टयिष्यामि ।

(क) नात्र एषोऽपराध्यति । एष खल्वत्रापराध्यति । अरे रे राजश्यालक संस्थानक दुर्जन दुर्मनुष्य, युक्तं नेदम् । यद्यपि नाम तत्रभवानार्यचारुदत्तो दरिद्रः संवृत्तः, तत्किं तस्य गुणैर्नालंकृतोज्जयिनी । येन तस्य गृहं प्रविश्य परिजनस्येदृश उपमर्दः क्रियते ।

मा दुर्गत इति परिभवो नास्ति कृतान्तस्य दुर्गतो नाम ।
चारित्र्येण विहीन आढ्योऽपि च दुर्गतो भवति ॥

---

भवत्येवेत्यर्थः । पाठान्तरे चोडे कर्णनासिकाशून्यः । दुट्टस्स विअ दुष्टस्येव । आचरितद्वेषस्य वैरिणः । यद्वा । दुष्टश्वानपराधोऽपि निग्रहं प्राप्नोत्येवेत्यर्थः । शुष्कवंशप्रहारेण । शुष्कोऽतिदीर्घत्वप्रतिपादनाय । एवंभूतस्य शिरः कुट्यते । तथा तव शिरः कुट्टिष्यामि ॥ राजश्यालकेत्यादि । संस्थानक इति तस्य नाम । उपमर्दो निग्रहः । **मा दुग्गदो इति ।** गाथा । मा दुर्गत इति परिभवो नास्ति कृतान्तस्य दे(दै)वस्य दुर्गतो नाम । नाम संभावनायाम् । चारित्र्येण विहीन आढ्योऽपि दुर्गतो दरिद्रो भवति ॥ ४३ ॥ महाब्राह्मणश्चाण्डालः । **सकामेति** । सकामा स्वाधीनयौवनेतिपदाभ्यामस्या धारणं

विदूषकः—किं इअम् । (क)

विटः—शान्तं पापम् ।

काचित्स्वाधीनयौवना ।

सा नष्टा शङ्कया तस्याः प्राप्तेयं शीलवञ्चना ॥ ४४ ॥

सर्वथा इदमनुनयसर्वस्वं गृह्यताम् । (इति खड्गमुत्सृज्य कृताञ्जलिः पादयोः पतति ।)

विदूषकः—सप्पुरिस, उट्ठेहि उट्ठेहि । अआणन्तेण मए तुमं उवालद्धे । संपदं उण जाणन्तो अणुणेमि । (ख)

विटः—ननु भवानेवात्रानुनेयः । तदुत्तिष्ठामि समयतः ।

विदूषकः—भणादु भवम् । (ग)

विटः—यदीमं वृत्तान्तमार्यचारुदत्तस्य नाख्यास्यसि ।

विदूषकः—न कधइस्सम् । (घ)

विटः—

एष ते प्रणयो विप्र शिरसा धार्यते मया ।

गुणशस्त्रैर्वयं येन शस्त्रवन्तोऽपि निर्जिताः ॥ ४५ ॥

शकारः—(सासूयम् ।) किं णिमित्तं उण भावे, एदश्श दुट्टबडुअश्श किविणअञ्जलिं कदुअ पाएशु णिवडिदे । (ङ)

---

(क) किमियम् ।

(ख) सत्पुरुष, उत्तिष्ठोत्तिष्ठ । अजानता मया त्वमुपालब्धः । सांप्रतं पुनर्जानन्ननुनयामि ।

(ग) भणतु भवान् ।

(घ) न कथयिष्यामि ।

(ङ) किंनिमित्तं पुनर्भाव, एतस्य दुष्टवटुकस्य कृपणाञ्जलिं कृत्वा पादयोर्निपतितः ।

---

नापराधाय । सा वेश्या तिष्ठति न स्त्रियमित्याशयः । शीलवञ्चना दुश्चरितसंभावना ॥ ४४ ॥ सत्पुरुष, उत्तिष्ठोत्तिष्ठ । अजानता मया त्वमुपालब्धः । सांप्रतं पुनर्जानन्ननुनयामि । आदरविषयतानुनयः ॥ समयः क्रियाबन्धः ॥ समयमेवाह—यदीममिति ॥ **एष इति** । गुणशस्त्रैः गुणा एव शस्त्राणि तैः ॥ ४५ ॥ किंनिमित्तं पुनर्भाव, एतस्य दुष्टबटुकस्य पादयोर्निपतितः । किविणं कृपणम् ॥

**विटः**—भीतोऽस्मि ।

**शकारः**—कश्श तुमं भीदे । (क)

**विटः**—तस्य चारुदत्तस्य गुणेभ्यः ।

**शकारः**—के तश्श गुणा जश्श गेहं पविशिअ अशिदव्वं ण णत्थि । (ख)

**विटः**—मा मैवम् ।

सोऽस्मद्विधानां प्रणयैः कृशीकृतो
न तेन कश्चिद्विभवैर्विमानितः ।
निदाघकालेष्विव सोदको ह्रदो
नृणां स तृष्णामपनीय शुष्कवान् ॥ ४६ ॥

**शकारः**—(सामर्षम् ।) के शे गब्भदासीए पुत्ते
शूले विक्कन्ते पण्डवे शेदकेदू
पुत्ते लाधाए लावणे इन्ददत्ते ।
आहो कुन्तीए तेण लामेण जादे
अश्शत्थामे धम्मपुत्ते जडाऊ ॥ ४७ ॥ (ग)

---

(क) कस्मात्त्वं भीतः ।

(ख) के तस्य गुणा यस्य गृहं प्रविश्याशितव्यमपि नास्ति ।

(ग) कः स गर्भदास्याः पुत्रः
शूरो विक्रान्तः पाण्डवः श्वेतकेतुः
पुत्रो राधाया रावण इन्द्रदत्तः ।
आहो कुन्त्या तेन रामेण जातः
अश्वत्थामा धर्मपुत्रो जटायुः ॥

---

के तस्य गुणा यस्य गृहं प्रविश्याशितव्यं भोक्तव्यमपि नास्ति । यद्वा । अन्हिअदव्वं पि आह्निकद्रव्यमद्य भोक्तव्यमपीत्यर्थः ॥ **स इति** । प्रणयैः प्रार्थनाभिः । 'स्नेहप्रकारैः समयोचितदानैरित्यर्थः' इत्येके॥४६॥**के शे गब्भदासीए पुत्ते शूले इत्यादि**। श्लोको वैश्वदेव्या वृत्तेन । कः स गर्भदास्या जन्मदास्याः पुत्रः शूरो विक्रान्तः पाण्डवः श्वेतकेतुः पुत्रो राधाया रावण इन्द्रदत्तः । आहो उषायास्तेन रामेण जातोऽश्व

**विटः**—मूर्ख, आर्यचारुदत्तः खल्वसौ ।

दीनानां कल्पवृक्षः स्वगुणफलनतः सज्जनानां कुटुम्बी
आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः ।
सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो
ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये ॥४८॥

तदितो गच्छामः ।

**शकारः**—अगेण्हिअ वशन्तशेणिअम् । (क)

**विटः**—नष्टा वसन्तसेना ।

**शकारः**—कथं विअ । (ख)

**विटः**—

अन्धस्य दृष्टिरिव पुष्टिरिवातुरस्य
मूर्खस्य बुद्धिरिव सिद्धिरिवालसस्य ।
स्वल्पस्मृतेर्व्यसनिनः परमेव विद्या
त्वां प्राप्य सा रतिरिवारिजने प्रनष्टा ॥ ४९ ॥

**शकारः**—अगेण्हिअ वशन्तशेणिअं ण गमिश्शम् । (ग)

**विटः**—एतदपि न श्रुतं त्वया ।

आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यते ।
हृदये गृह्यते नारी यदिदं नास्ति गम्यताम् ॥ ५० ॥

**शकारः**—यदि गच्छशि, गच्छ तुमम् । हगे ण गमिश्शम् । (घ)

---

(क) अगृहीत्वा वसन्तसेनाम् ।
(ख) कथमिव ।
(ग) अगृहीत्वा वसन्तसेनां न गमिष्यामि ।
(घ) यदि गच्छसि, गच्छ त्वम् । अहं न गमिष्यामि ।

---

त्थामा धर्मपुत्रो जटायुः ॥ व्यर्थं विरुद्धार्थम् । श्वेतकेतुरौद्दालकिर्दुर्वाससो मातुलः ऋषिविशेषः । इन्द्रदत्तो बृहत्कथाप्रलम्भके रूयंशे संस्थितः ॥ ४७ ॥ **दीनानामिति** । सज्जनानां कुटुम्ब्युपजीव्यः ॥ ४८ ॥ अगृहीत्वा वसन्तसेनाम् ॥ नष्टादर्शनं गता ॥ **अन्धस्येति** ॥ ४९ ॥ **आलान इति** । यदि चेदर्थे । चेन्नास्ति तदा गम्यताम् ॥ ५० ॥ गतः खलु भावोऽभा-

**विटः**—एवम् । गच्छामि । (इति निष्क्रान्तः ।)

**शकारः**—गडे क्खु भावे अभावम् । (विदूषकमुद्दिश्य ।) अले काकपदशीशमश्तका दुट्टबडुका, उवविश उवविश । (क)

**विदूषकः**—उववेसिदा ज्जेव अम्हे । (ख)

**शकारः**—केण । (ग)

**विदूषकः**—कअन्तेण । (घ)

**शकारः**—उट्ठेहि उट्ठेहि । (ङ)

**विदूषकः**—उट्ठिस्सामो । (च)

**शकारः**—कदा । (छ)

**विदूषकः**—जदा पुणो वि देव्वं अणुऊलं भविस्सदि । (ज)

**शकारः**—अले, लोद लोद । (झ)

**विदूषकः**—रोदाविदा ज्जेव अम्हे । (ञ)

---

(क) गतः खलु भावोऽभावम् । अरे काकपदशीर्षमस्तक दुष्टबटुक, उपविशोपविश ।

(ख) उपवेशिता एव वयम् ।

(ग) केन ।

(घ) कृतान्तेन ।

(ङ) उत्तिष्ठोत्तिष्ठ ।

(च) उत्थास्यामः ।

(छ) कदा ।

(ज) यदा पुनरपि दैवमनुकूलं भविष्यति ।

(झ) अरे, रुदिहि रुदिहि ।

(ञ) रोदिता एव वयम् ।

---

वमदर्शनम् । काकपदशीशमश्तका इति । द्यूताद्यकार्यप्रवृत्तौ काकपदाकारा ये धूर्तास्तेषां शीर्षप्राया ग्रामण्यस्तेषां मस्तकभूत धूर्तचक्रवर्तिनामपि प्रधानभूत । एतेनाचारकुलयोराक्षेपः कृतः । केचित्तु—'काकपदशीर्ष काकपदवत्पञ्चधा शीर्षं मस्तकं यस्य । पञ्चेत्युपलक्षणम् । अष्टकपालः । तेनालक्षणयुक्तमस्तक इत्यर्थः' इत्याहुः । अत्र च मते शीशमश्तका इति शकारवाणीत्वेन पुनरुक्तत्वं न दोषः ।

**शकारः**—केण । (क)

**विदूषकः**—दुग्गदीए । (ख)

**शकारः**—अले, हश हश । (ग)

**विदूषकः**—हसिस्सामो । (घ)

**शकारः**—कदा । (ङ)

**विदूषकः**—पुणो वि ऋद्धीए अज्जचारुदत्तस्स । (च)

**शकारः**—अले दुट्टबडुका, भणेशि मम वअणेण तं दलिद्दचालुदत्तकम्—'एशा शशुवण्णा शहिलण्णा णवणाडअदंशणुट्ठिदा शुत्तदालि व्व वशन्तशेणा णाम गणिआदालिआ कामदेवाअदणुज्जाणादो पहुदि तुमं अणुलत्ता अम्हेहिं बलक्कालाणुणीअमाणा तुह गेहं पविट्ठा । ता जइ मम हत्थे शअं ज्जेव पट्टाविअ एणं शमप्पेशि, तदो अधिअलणे ववहालं विणा लहुं णिज्जादमाणाह तव मए अणुबद्धा पीदी हुविश्शदि । आदु अणिज्जादमाणाह मलणन्तिके वेले हुविश्शदि । अवि अ पेक्ख ।

---

(क) केन ।

(ख) दुर्गत्या ।

(ग) अरे, हस हस ।

(घ) हसिष्यामः ।

(ङ) कदा ।

(च) पुनरपि ऋद्ध्यार्यचारुदत्तस्य ।

---

दुष्टबटो । अरे रो(रु)दिहि ॥ अरे दुष्टबटुक, भणिष्यसि मम वचनेन तं दरिद्रचारुदत्तकम्—'एषा ससुवर्णा सहिरण्या नवनाटकदर्शनोत्थिता सूत्रधारीव वसन्तसेनानाम्नी गणिकादारिका कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्तास्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा । ततोऽधिकरणे व्यवहारं विना इत्यनेन व्यवहारनाम्नो नवमाङ्कस्य सूचनम् । लघु शीघ्रम् । णिज्जादमाणाह निर्यातयतः । तव मयानुबद्धा प्रीतिर्भविष्यति । अणिज्जादमाणाह अनिर्यातयतः । मरणान्तिकं

कश्चालुका गोच्छडडित्तवेण्टा
शाके अ शुक्खे तलिदे हु मंशे ।
भत्ते अ हेमन्तिअलत्तिशिद्धे
लीणे अ वेले ण हु होदि पूदी ॥ ५१ ॥

शोश्तकं भणेशि, लश्तकं भणेशि । तधा भणेशि जधा हगे अत्तणकेलिकाए पाशादबालग्गकवोदवालिआए उवविट्ठे शुणामि । अण्णधा जदि भणेशि, ता कवालपविट्ठकवित्थगुडिअं विअ मश्तअं दे मडमडाइश्शम् (क)

(क) अरे दुष्टबटुक, भणिष्यसि मम वचनेन तं दरिद्रचारुदत्तकम्—'एषा ससुवर्णा सहिरण्या नवनाटकदर्शनोत्थिता सूत्रधारीव वसन्तसेनानाम्नी गणिकादारिका कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्तास्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा । तद्यदि मम हस्ते स्वयमेव प्रस्थाप्यैनां समर्पयसि, ततोऽधिकरणे व्यवहारं विना लघु निर्यातयतस्तव मयानुबद्धा प्रीतिर्भविष्यति । अथवानिर्यातयतो मरणान्तिकं वैरं भविष्यति । अपि च प्रेक्षस्व ।

कूष्माण्डी गोमयलिप्तवृन्ता
शाकं च शुष्कं तलितं खलु मांसम् ।
भक्तं च हैमन्तिकरात्रिसिद्धं
लीनायां च वेलायां न खलु भवति पूतिः ॥

वैरं भविष्यति । अपि च प्रेक्षस्व । **कश्चालुका इत्यादि** । उपजातिच्छन्दसा । कूष्माण्डी गोमयलिप्तवृन्ता शाकं च शुष्कं पलिरं प्रचुरप्रलेहं मांसम् । 'तलिदं स्नेहपक्के देशी' इत्येके । 'भडिदे' इति पाठे भटित्रमित्यर्थः । 'शूलाकृतं भटित्रं च' इत्यमरः । भक्तं च हैमन्तिकरात्रिसिद्धं लीणे अ ऋणं च वैरं च न भवति । पूदी पूतिः ॥ चिरंतनत्वेन प्रशिथिलं स्वकार्यम् ॥ ५१ ॥ शोस्तकं शोभनम् । लस्तकं सकपटम् । भणिष्यसि । तथा भणिष्यसि । भण(णे)शीति भविष्यद्वर्तमानयोस्तुल्यं रूपम् । यथाहमात्मकीयायां प्रासादस्य वालाग्रलक्षितायां कपोतपालिकायां विटङ्के । 'वालाग्रं मत्तवारणम्' । कपोतपालिका उपरिगृहश्रेणीति दक्षिणापथे लोकोक्तिरियम्' इति प्राचीनटीका । तस्यामुपविष्टः शृणोमि ।

**विदूषकः**—भणिस्सम् । (क)

**शकारः**—(अपवार्य ।) चेडे, गडे शच्चकं ज्जेव भावे । (ख)

**चेटः**—अध इं । (ग)

**शकारः**—ता शिग्घं अवक्कमम्ह । (घ)

**चेटः**—ता गेण्हदु भट्टके अशिम् । (ङ)

**शकारः**—तव ज्जेव हत्थे चिट्ठदु । (च)

**चेटः**—एशे भट्टालके । गेण्हदु णं भट्टके अशिम् । (छ)

**शकारः**—(विपरीतं गृहीत्वा ।)

णिव्वक्कलं मूलकपेशिवण्णं
खन्धेण घेत्तूण अ कोशशुत्तम् ।

---

शोभनं भणिष्यसि, सकपटं भणिष्यसि । तथा भणिष्यसि यथाहमात्मकीयायां प्रासादबालाग्रकपोतपालिकायामुपविष्टः शृणोमि । अन्यथा यदि भणसि, तदा कपाटप्रविष्टकपित्थगुलिकमिव मस्तकं ते मडमडायिष्यामि ।

(क) भणिष्यामि ।

(ख) चेटः गतः सत्यमेव भावः ।

(ग) अथ किम् ।

(घ) तच्छीघ्रमपक्रमावः ।

(ङ) तद्गृण्हातु भट्टारकोऽसिम् ।

(च) तवैव हस्ते तिष्ठतु ।

(छ) एष भट्टारकः । गृण्हात्वेनं भट्टारकोऽसिम् ।

---

अन्यथा यदि भणसि तदा कपाटप्रविष्टं कपित्थगुलिकमिव मस्तकं तव शब्दविशेषयुक्तं तथा भक्षयिष्यामि लोकोक्त्या मडमडायिश्शमिति व्याख्यायते । कपित्थं फलविशेषः । 'लस्तकं शोस्तकं द्वयमपि शोभनार्थम्' इति प्राचीनटीका ॥ हे चेट, गतो भावो विटः सत्यम् ॥ ततः शीघ्रमपक्रमावः ॥ गृह्णातु भट्टारकोऽसिम् ॥ तवैव हस्ते तिष्ठतु ॥ एषोऽसिः । भट्टारकः स्वामिकः । गृह्णात्वेनं भट्टारकोऽसिम् ॥ **णिव्वक्कलमित्यादि** । उपजातिच्छन्दसा । निर्वल्कलं मूलकपेशिवण्णम् । पेशी त्वक् । मूलकत्वग्वर्णम् । आलोहितमित्यर्थः । स्कन्धेन गृहीत्वा च कोशीषु सुप्तम् । अल्पार्थे स्त्रीत्वम् । कोशावस्थित-

कुक्केहि कुक्कीहि अ बुक्कअन्ते
जधा शिआले शलणं पलामि ॥ ५२ ॥ (क)

(परिक्रम्य निष्क्रान्तौ ।)

**विदूषकः**—भोदि रदणिए, ण क्खु दे अअं अवमाणो तत्तभवदो चारुदत्तस्स णिवेदइदव्वो । दोग्गच्चपीडिअस्स मण्णे दिउणदरा पीडा हुविस्सदि । (ख)

**रदनिका**—अज्ज मित्तेअ, रदणिआ क्खु अहं संजदमुही । (ग)

**विदूषकः**—एवं ण्णेदम् । (घ)

**चारुदत्तः**—(वसन्तसेनामुद्दिश्य ।) रदनिके, मारुताभिलाषी प्रदोषसमयशीतार्तो रोहसेनः । ततः प्रवेश्यतामभ्यन्तरमयम् । अनेन प्रावारकेण छादयैनम् । (इति प्रावारकं प्रयच्छति ।)

**वसन्तसेना**—(स्वगतम् ।) कधं परिअणोत्ति मं अवगच्छदि । (प्रावारकं गृहीत्वा समाघ्राय च स्वगतं सस्पृहम् ।) अम्हहे, जादीकुसुमवासिदो पावारओ । अणुदासीणं से ज्जोव्वणं पडिभासेदि । (ङ) (अपवारितकेन प्रावृणोति ।)

---

(क) निर्वल्ककं मूलकपेशिवर्णं
स्कन्धेन गृहीत्वा च कोशसुप्तम् ।
कुक्कुरैः कुक्कुरीभिश्च बुक्कयमानो
यथा श्रृगालः शरणं प्रयामि ॥

(ख) भवति रदनिके, न खलु तेऽयमपमानस्तत्रभवतश्चारुदत्तस्य निवेदयितव्यः । दौर्गत्यपीडितस्य मन्ये द्विगुणतरा पीडा भविष्यति ।

(ग) आर्य मैत्रेय, रदनिका खल्वहं संयतमुखी ।

(घ) एवमिदम् ।

(ङ) कथं परिजन इति मामवगच्छति । आश्चर्यम्, जातीकुसुमवासितः प्रावारकः । अनुदासीनमस्य यौवनं प्रतिभासते ।

---

मित्यर्थः । कुक्कुरैः कुक्कुरीभिश्च शब्दायमानो यथा श्र्गालस्तथा स्वगृहं प्रयामि विदूषकरदनिके कुक्कुरकुक्कुरीस्थाने ॥ ५२ ॥ न खलु ते परिभवश्चारुदत्तस्य निवेदयितव्यः । दौर्गत्यपीडितस्य द्विगुणतरा पीडा भविष्यति ॥ एवं ण्णेदमिति एवार्थे ॥ रोहसेनश्चारुदत्तसुतः ॥ अम्हहे विस्मये । अनुदासीनं साभिलाषम्

**चारुदत्तः**—ननु रदनिके, रोहसेनं गृहीत्वाभ्यन्तरं प्रविश ।

**वसन्तसेना**—(स्वगतम् ।) मन्दभाइणी क्खु अहं तुम्हे अब्भन्तररस्स । (क)

**चारुदत्तः**—ननु रदनिके, प्रतिवचनमपि नास्ति । कष्टम् ।

यदा तु भाग्यक्षयपीडितां दशां
नरः कृतान्तोपहितां प्रपद्यते ।
तदास्य मित्राण्यपि यान्त्यमित्रतां
चिरानुरक्तोऽपि विरज्यते जनः ॥ ५३ ॥

(रदनिकामुपसृत्य)

**विदूषकः**—भो, इअं सा रदणिआ । (ख)

**चारुदत्तः**—इयं सा रदनिका । इयमपरा का ।

अविज्ञातावसक्तेन दूषिता मम वाससा ।

**वसन्तसेना**—(स्वगतम् ।) णं भूसिदा । (ग)

**चारुदत्तः**—

छादिता शरदभ्रेण चन्द्रलेखेव दृश्यते ॥ ५४ ॥

अथवा, न युक्तं परकलत्रदर्शनम् ।

**विदूषकः**—भो, अलं परकलत्रदंसणसङ्काए । एसा वसन्तसेणा कामदेवाअदनुज्जाणादो पहुदि भवन्तमणुरत्ता । (घ)

---

(क) मन्दभागिनी खल्वहं तवाभ्यन्तरस्य ।

(ख) भोः, इयं सा रदनिका ।

(ग) ननु भूषिता ।

(घ) भोः, अलं परकलत्रदर्शनशङ्कया । एषा वसन्तसेना कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्ता ।

---

तदनुरूपचेष्टायोगात् ॥ अभ्यन्तरगमनस्याभागिनी । वेश्यात्वात् ॥ यदेति । भाग्यं शोभनं कर्म ॥ ५३ ॥ **अविज्ञातेति** । दूषिता परपुरुषत्वात् ॥ ५४ ॥

**चारुदत्तः**—इयं वसन्तसेना । (स्वगतम् ।)

यया मे जनितः कामः क्षीणे विभवविस्तरे ।
क्रोधः कुपुरुषस्येव स्वगात्रेष्वेव सीदति ॥ ५५ ॥

**विदूषकः**—भो वअस्स, एसो क्खु राअसालो भणादि । (क)

**चारुदत्तः**—किम् ।

**विदूषकः**—एषा ससुवण्णा सहिलण्णा णवणाडअदंसणुट्ठिदा सुत्तधालि व्व वसन्तसेणा णाम गणिआदालिआ कामदेवाअदणुज्जाणादो पहुदि तुमं अणुलत्ता अम्हेहिं बलक्कालाणुणीअमाणा तुह गेहं पविट्ठा । (ख)

**वसन्तसेना**—(स्वगतम् ।) बलक्काराणुणीअमाणेत्ति जं सच्चम्, अलंकिदम्हि एदेहिं अक्खरेहिं । (ग)

**विदूषकः**—ता जइ मम हत्थे सअं ज्जेव पट्ठाविअ एणं समप्पेसि, तदो अधिअलणे ववहालं विणा लहुं णिज्जादमाणाह तव मए अणुबद्धा पीदी हुविस्सदि । अण्णधा मलणन्तिके वेले हुविस्सदि । (घ)

**चारुदत्तः**—(सावज्ञम् ।) अज्ञोऽसौ । (स्वगतम् ।) अये, कथं देवतोपस्थानयोग्या युवतिरियम् । तेन खलु तस्यां वेलायाम्

---

(क) भो वयस्य, एष खलु राजश्यालो भणति ।

(ख) एषा ससुवर्णा सहिरण्या नवनाटकदर्शनोत्थिता सूत्रधारीव वसन्तसेनानाम्नी गणिकादारिका कामदेवायतनोद्यानात्प्रभृति त्वामनुरक्तास्माभिर्बलात्कारानुनीयमाना तव गेहं प्रविष्टा ।

(ग) बलात्कारानुनीयमानेति यत्सत्यम्, अलंकृतास्म्येतैरक्षरैः ।

(घ) तद्यदि मम हस्ते स्वयमेव प्रस्थाप्यैनां समर्पयसि, ततोऽधिकरणे व्यवहारं विना लघु निर्यातयतस्तव मयानुबद्धा प्रीतिर्भविष्यति । अन्यथा मरणान्तिकं वैरं भविष्यति ।

---

कामदेवायतनोद्यानात्प्रभृति ॥ **ययेति** । सीदति कर्तव्यासामर्थ्यात्प्रव्यक्तो न भवति ॥ ५५ ॥ एषेत्यादि पूर्वोक्तमेव भणति । अलंकृतास्मीति । ममान्यत्रा-

प्रविश गृहमिति प्रतोद्यमाना
न चलति भाग्यकृतां दशामवेक्ष्य ।
पुरुषपरिचयेन च प्रगल्भं
न वदति यद्यपि भाषते बहूनि ॥ ५६ ॥

(प्रकाशम् ।) भवति वसन्तसेने, अनेनाविज्ञानादपरिज्ञातपरिजनोपचारेणापराद्धोऽस्मि । शिरसा भवतीमनुनयामि ।

**वसन्तसेना**—एदिणा अणुचिदभूमिआरोहणेण अवरज्झा अज्जं सीसेण पणमिअ पसादेमि । (क)

**विदूषकः**—भो, दुवेवि तुम्हे सुखं पणमिअ कलमकेदारा अण्णोण्णं सीसेण सीसं समाअदा । अहं पि इमिणा करहजाणुसरिसेण सीसेण दुवेवि तुम्हे पसादेमि । (ख) (इत्युत्तिष्ठति ।)

**चारुदत्तः**—भवतु । तिष्ठतु प्रणयः ।

**वसन्तसेना**—(स्वगतम् ।) चदुरो मधुरो अ अअं उवण्णासो । ण जुत्तं अज्ज एरिसेण इध आअदाए मए पडिवसिदुम् । भोदु । एव्वं दाव भणिस्सम् । (प्रकाशम् ।) अज्ज, जइ एव्वं अहं अज्जस्स अणुग्गेज्झा ता इच्छे अहं इमं अलंकारअं अज्जस्स गेहे णिक्खिविदुम् । अलंकारस्स णिमित्तं एदे पावा अणुसरन्ति । (ग)

---

(क) एतेनानुचितभूमिकारोहणेनापराद्धार्ये शीर्षेण प्रणम्य प्रसादयामि ।

(ख) भोः, द्वावपि युवां सुखं प्रणम्य कलमकेदारावन्योन्यं शीर्षेण शीर्षं समागतौ । अहमप्यमुना करभजानुसदृशेन शीर्षेण द्वावपि युवां प्रसादयामि ।

(ग) चतुरो मधुरश्चायमुपन्यासः । न युक्तमद्येदृशेनेहागतया मया प्रतिवस्तुम् । भवतु । एवं तावद्भणिष्यामि । आर्य, यद्येवमहमार्यस्यानुग्राह्या तदिच्छाम्यहमिममलंकारकमार्यस्य गेहे निक्षेप्तुम् । अलंकारस्य निमित्तमेते पापा अनुसरन्ति ।

---

भिलाषो नास्तीत्यर्थः ॥ देवतेवोपस्थानं यस्याः सा । **प्रविश गृहमिति** । पुष्पिताग्रा वृत्तम् ॥ ५६ ॥ अनुचितभूमिसमारोहणं पक्षद्वारेणावासप्रवेशादिकम् ॥ करभ उष्ट्रशिशुः ॥ प्रणय इत्यनेन संभोगप्रार्थना कटाक्षिता ॥ ईदृशेना-

**चारुदत्तः**—अयोग्यमिदं न्यासस्य गृहम् ।

**वसन्तसेना**—अज्ज, अलीअम् । पुरुसेसु णासा णिक्खिवि-अन्ति, ण उण गेहेसु । (क)

**चारुदत्तः**—मैत्रेय, गृह्यतामयमलंकारः ।

**वसन्तसेना**—अणुग्गहिदम्हि । (ख) (इत्यलंकारमर्पयति ।)

**विदूषकः**—(गृहीत्वा ।) सोत्थि भोदिए । (ग)

**चारुदत्तः**—धिङ् मूर्ख, न्यासः खल्वयम् ।

**विदूषकः**—(अपवार्य ।) जइ एव्वं ता चोरेहिं हरिज्जउ । (घ)

**चारुदत्तः**—अचिरेणैव कालेन ।

**विदूषकः**—एसो से अम्हाणं विण्णासो । (ङ)

**चारुदत्तः**—निर्यातयिष्ये ।

**वसन्तसेना**—अज्ज, इच्छे अहम्, इमिणा अज्जेण अणुगच्छि-ज्जन्ती सकं गेहं गन्तुम् । (च)

**चारुदत्तः**—मैत्रेय, अनुगच्छ तत्रभवतीम् ।

**विदूषकः**—तुमं ज्जेव एदं कलहंसगामिणीं अणुगच्छन्तो राअ-हंसो विअ सोहसि । अहं उण बम्हणो जहिं जहिं जणेहिं चउ-प्पहोवणीदो उवहारो कुक्कुरेहिं विअ खज्जमाणो विवज्जिस्सम् । (छ)

---

(क) आर्य, अलीकम् । पुरुषेषु न्यासा निक्षिप्यन्ते, न पुनर्गेहेषु ।

(ख) अनुगृहीतास्मि ।

(ग) स्वस्ति भवत्यै ।

(घ) यद्येवं तदा चोरैर्ह्रियताम् ।

(ङ) एषोऽस्या अस्माकं विन्यासः ।

(च) आर्य, इच्छाम्यहम्, अनेनार्येणानुगम्यमाना स्वकं गेहं गन्तुम् ।

(छ) त्वमेवैतां कलहंसगामिनीमनुगच्छन्राजहंस इव शोभसे । अहं

---

गृहीतसंभोगोपकरणादिना । पापा अकार्यकारिणः ॥ भग्नत्वाद्रक्षकाभावाच्चायोग्यता ॥ आर्य, पुरुषेषु न्यासा निक्षिप्यन्ते, न पुनर्गेहेषु ॥ अत्यन्तप्रश्रयवत्वादनुग्रहः ॥ चोरेहिं हरिज्जउ इति संधिच्छेदनाम्नस्तृतीयाङ्कस्य सूचनम् ॥ सकं

**चारुदत्तः**—एवं भवतु । स्वयमेवानुगच्छामि तत्रभवतीम् । तद्राजमार्गविश्वासयोग्याः प्रज्वाल्यन्तां प्रदीपिकाः ।

**विदूषकः**—वड्ढमाणअ, पज्जालेहि पदीविआओ । (क)

**चेटः**—(जनान्तिकम् ।) अले, तेल्लेण विणा पदीविआओ पज्जालीअन्ति । (ख)

**विदूषकः**—(जनान्तिकम् ।) ही, ताओ क्खु अम्हाणं पदीविआओ अवमाणिदणिद्धणकामुआ विअ गणिआ णिस्सिणेहाओ दाणिं संवुत्ता । (ग)

**चारुदत्तः**—मैत्रेय, भवतु । कृतं प्रदीपिकाभिः । पश्य ।

उदयति हि शशाङ्कः कामिनीगण्डपाण्डु-
ग्रहगणपरिवारो राजमार्गप्रदीपः ।
तिमिरनिकरमध्ये रश्मयो यस्य गौराः
स्नुतजल इव पङ्के क्षीरधाराः पतन्ति ॥ ५७ ॥

(सानुरागम् ।) भवति वसन्तसेने, इदं भवत्या गृहम् । प्रविशतु भवती ।

(वसन्तसेना सानुरागमवलोकयन्ती निष्क्रान्ता ।)

---

पुनर्ब्राह्मणो यत्र तत्र जनैश्चतुष्पथोपनीत उपहारः कुक्कुरैरिव खाद्यमानो विपत्स्ये ।

(क) वर्धमानक, प्रज्वालय प्रदीपिकाः ।

(ख) अरे, तैलेन विना प्रदीपिकाः प्रज्वाल्यन्ते ।

(ग) आश्चर्यम्, ताः खल्वस्माकं प्रदीपिका अपमानितनिर्धनकामुका इव गणिका निस्नेहा इदानीं संवृत्ताः ।

---

स्वकम् ॥ चतुष्पथोपनीत इवोपहारो देवताबलिरूपः खाद्यमानो विपत्स्ये ॥ ही आश्चर्ये । यत एव निर्धनोऽत एवापमानितः । निस्नेहा निस्तैलाश्च । स्नेहोऽनुरागस्तैलं च । संवुत्ता संवृत्ताः ॥ भवत्वित्युपसंहारोक्तिः । **उदयतीति** ।

**चारुदत्तः**—वयस्य, गता वसन्तसेना । तदेहि । गृहमेव गच्छावः ।

राजमार्गो हि शून्योऽयं रक्षिणः संचरन्ति च ।
वञ्चना परिहर्तव्या बहुदोषा हि शर्वरी ॥ ५८ ॥

(परिक्रम्य ।) इदं च सुवर्णभाण्डं रक्षितव्यं त्वया रात्रौ, वर्धमानकेनापि दिवा ।

**विदूषकः**—जधा भवं आणवेदि । (क)

(इति निष्क्रान्तौ ।)

**इति मृच्छकटिकेऽलंकारन्यासो नाम प्रथमोऽङ्कः ।**

---

(क) यथा भवानाज्ञापयति ।

---

यस्य हिमांशोस्तमोवृन्दमध्ये शुभ्रा रश्मयः पतन्ति । यथा प्रभूतजले कर्दमे दुग्धधाराः ॥ ५७ ॥ **राजमार्ग इति** ॥ ५८ ॥

इति महोपाध्यायश्रीपृथ्वीधरकृतौ मृच्छकटिकाविवृतौ न्यासार्पणो नाम प्रथमोऽङ्कः ।

द्वितीयोऽङ्कः ।

(प्रविश्य)

**चेटी**—अत्ताए अज्जआसआसं संदेसेण पेसिदम्हि । ता जाव पविसिअ अज्जआसआसं गच्छामि । (परिक्रम्यावलोक्य च ।) एसा अज्जआ हिअएण किंपि आलिहन्ती चिट्ठदि । ता जाव उपसप्पामि । (क)

(ततः प्रविशत्यासनस्था सोत्कण्ठा वसन्तसेना मदनिका च ।)

**वसन्तसेना**—हञ्जे, तदो तदो । (ख)

**चेटी**—अज्जए, ण किंपि मन्तेसि । किं तदो तदो । (ग)

**वसन्तसेना**—किं मए भणिदम् । (घ)

**चेटी**—तदो तदो त्ति । (ङ)

**वसन्तसेना**—(सभ्रूक्षेपम् ।) आं, एव्वम् । (च)

(उपसृत्य)

**प्रथमा चेटी**—अज्जए, अत्ता आदिसदि—'ण्हादा भविअ देवदाणं पूअं णिव्वत्तेहि' त्ति । (छ)

---

(क) मात्रार्यासकाशं संदेशेन प्रेषितास्मि । तद्यावत्प्रविश्यार्यासकाशं गच्छामि । एषार्या हृदयेन किमप्यालिखन्ती तिष्ठति । तद्यावदुपसर्पामि ।

(ख) चेटि, ततस्ततः ।

(ग) आर्ये, न किमपि मन्त्रयसि । किं ततस्ततः ।

(घ) किं मया भणितम् ।

(ङ) ततस्तत इति ।

(च) आं, एवम् ।

(छ) आर्ये, मातादिशति—'स्नाता भूत्वा देवतानां पूजां निर्वर्तय' इति ।

---

अत्ताए वसन्तसेनामात्रा । अज्जआसआसं वसन्तसेनासकाशम् । संदेशेन प्रयोजनार्थम् ॥ हञ्जे नीचे । 'हञ्जे, तदो तदो' इत्युन्माददशारीत्युपन्यासः ॥

**वसन्तसेना**—हञ्जे, विण्णवेहि अत्तम्—'अज्ज ण ण्हाइस्सम्। ता बम्हणो ज्जेव पूअं णिव्वत्तेदु' त्ति। (क)

**चेटी**—जं अज्जआ आणवेदि। (ख) (इति निष्क्रान्ता।)

**मदनिका**—अज्जए, सिणेहो पुच्छदि, ण पुरोभाइदा, ता किं णेदम्। (ग)

**वसन्तसेना**—मदणिए, केरिसिं मं पेक्खसि। (घ)

**मदनिका**—अज्जआए सुण्णहिअअत्तणेण जाणामि, हिअअगदं कंपि अज्जआ अहिलसदि त्ति। (ङ)

**वसन्तसेना**—सुट्ठु तुए जाणिदम्। परहिअअग्गहणपण्डिआ मदणिआ क्खु तुमम्। (च)

**मदनिका**—पिअं मे पिअम्। कामो क्खु णाम एसो भअवं अणुगहिदो महूसवो तरुणजणस्स। ता कधेदु अज्जआ, किं राआ, राअवल्लहो वा सेवीअदि। (छ)

**वसन्तसेना**—हञ्जे, रमिदुमिच्छामि, ण सेविदुम्। (ज)

---

(क) चेटि, विज्ञापय मातरम्—'अद्य न स्नास्यामि। तद्ब्राह्मण एव पूजां निर्वर्तयतु' इति।

(ख) यदार्याज्ञापयति।

(ग) आर्ये, स्नेहः पृच्छति, न पुरोभागिता, तत्किं न्विदम्।

(घ) मदनिके, कीदृशीं मां प्रेक्षसे।

(ङ) आर्यायाः शून्यहृदयत्वेन जानामि, हृदयगतं कमप्यार्याभिलषतीति।

(च) सुष्ठु त्वया ज्ञातम्। परहृदयग्रहणपण्डिता मदनिका खलु त्वम्।

(छ) प्रियं मे प्रियम्। कामः खलु नामैष भगवान्। अनुगृहीतो महोत्सवस्तरुणजनस्य। तत्कथयत्वार्या, किं राजा, राजवल्लभो वा सेव्यते।

(ज) चेटि, रन्तुमिच्छामि, न सेवितुम्।

---

अज्जआ वसन्तसेनैव। ण्हादा स्नाता। पूअं पूजाम्॥ पुरोभाइदा पुरोभागिता दोषदर्शिता। 'दोषैकदृक्पुरोभागी' इत्यमरः। दोषशून्यत्वेनेति भावः॥ भअवं भगवान्। 'भअवदा' इत्यपि पाठः। भगवता हरेण। स्वीकृतोऽनुगृहीत

**मदनिका**—विज्जाविसेसालंकिदो किं कोवि बम्हणजुआ कामीअदि। (क)

**वसन्तसेना**—पूअणीओ मे बम्हणो जणो। (ख)

**मदनिका**—किं अणेअणअराहिगमणजणिदविहववित्थारो वाणिअजुआ वा कामीअदि। (ग)

**वसन्तसेना**—हञ्जे, उवारूढसिणेहं पि पणइजणं परिच्चइअ देसन्तरगमणेण वाणिअजणो महन्तं विओअजं दुक्खं उप्पादेदि। (घ)

**मदनिका**—अज्जए, ण राआ, ण राअवल्लहो, ण बम्हणो, ण वाणिअजणो। ता को दाणिं सो भट्टिदारिआए कामीअदि। (ङ)

**वसन्तसेना**—हञ्जे, तुमं मए सह कामदेवाअदणुज्जाणं गदा आसि। (च)

**मदनिका**—अज्जए, गदम्हि। (छ)

**वसन्तसेना**—तह वि मं उदासीणा विअ पुच्छसि। (ज)

---

(क) विद्याविशेषालंकृतः किं कोऽपि ब्राह्मणयुवा काम्यते।

(ख) पूजनीयो मे ब्राह्मणजनः।

(ग) किमनेकनगराभिगमनजनितविभवविस्तारो वाणिजयुवा वा काम्यते।

(घ) चेटि, उपारूढस्नेहमपि प्रणयिजनं परित्यज्य देशान्तरगमनेन वाणिजजनो महद्वियोगजं दुःखमुत्पादयति।

(ङ) आर्ये, न राजा, न राजवल्लभः, न ब्राह्मणः, न वाणिजजनः। तत्क इदानीं स भर्तृदारिकया काम्यते।

(च) चेटि, त्वं मया सह कामदेवायतनोद्यानं गतासीः।

(छ) आर्ये, गतास्मि।

(ज) तथापि मामुदासीनेव पृच्छसि।

---

वा॥ ण सेविदुम्। कामोपभोगरसिकास्मि। न द्रव्यार्थिनीत्यर्थः॥ पूजनीयाश्च ये भवन्ति तेषां विलासवैमुख्यं सदेति भावः॥ उवारूढसिणेहं विवृद्धस्नेहम्॥

**मदनिका**—जाणिदम् । किं सो ज्जेव जेण अज्जआ सरणा-अदा अब्भुववण्णा । (क)

**वसन्तसेना**—किंणामहेओ क्खु सो । (ख)

**मदनिका**—सो क्खु सेट्ठिचत्तरे पडिवसदि । (ग)

**वसन्तसेना**—अइ, णामं से पुच्छिदासि । (घ)

**मदनिका**—सो क्खु अज्जए, सुगहीदणामहेओ अज्जचारुदत्तो णाम । (ङ)

**वसन्तसेना**—(सहर्षम् ।) साहु मदणिए, साहु । सुट्ठु तुए जाणिदम् । (च)

**मदनिका**—(स्वगतम् ।) एव्वं दाव । (प्रकाशम् ।) अज्जए, दलिद्दो क्खु सो सुणीअदि । (छ)

**वसन्तसेना**—अदो ज्जेव कामीअदि । दलिद्दपुरिससंकन्तमणा क्खु गणिआ लोए अवअणीआ भोदि । (ज)

**मदनिका**—अज्जए, किं हीणकुसुमं सहआरपादवं महुअ-रीओ उण सेवन्ति । (झ)

---

(क) ज्ञातम् । किं स एव येनार्या शरणागताभ्युपपन्ना ।

(ख) किंनामधेयः खलु सः ।

(ग) स खलु श्रेष्ठिचत्वरे प्रतिवसति ।

(घ) अयि, नामास्य पृष्टासि ।

(ङ) स खलु आर्ये, सुगृहीतनामधेय आर्यचारुदत्तो नाम ।

(च) साधु मदनिके, साधु । सुष्ठु त्वया ज्ञातम् ।

(छ) एवं तावत् । आर्ये, दरिद्रः खलु स श्रूयते ।

/(ज) अत एव काम्यते । दरिद्रपुरुषसंक्रान्तमनाः खलु गणिका लोकेऽवचनीया भवति ।

(झ) आर्यें, किं हीनकुसुमं सहकारपादपं मधुकर्यः पुनः सेवन्ते ।

---

भट्टिदारिआए ईश्वरसुतया ॥ सुहिदा सुखयुक्ता(?) ॥ अभ्युपपन्ना स्वीकृता ॥ सुगृहीतनामधेयो दातृत्वेन ॥ दरिद्रपुरुषदत्तमना अवचनीया भवति अर्थानभिलाषित्वात् । अतिख(?)श्चारुदत्तो ब्राह्मणः, अनध्यापकत्वेन विलासी, अन्यश्च

**वसन्तसेना**—अदो ज्जेव ताओ महुअरीओ वुच्चन्ति । (क)

**मदनिका**—अज्जए, जइ सो मणीसिदो ता कीस दाणिं सहसा ण अहिसारीअदि । (ख)

**वसन्तसेना**—हञ्जे, सहसा अहिसारिअन्तो पच्चुअआरदुब्बलदाए, मा दाव, जणो दुल्लहदंसणो पुणो भविस्सदि । (ग)

**मदनिका**—किं अदो ज्जेव सो अलंकारओ तस्स हत्थे णिक्खित्तो । (घ)

**वसन्तसेना**—हञ्जे, सुट्ठु दे जाणिदम् । (ङ)

(नेपथ्ये ।)

अले भट्टा, दशसुवण्णाह लुद्धु जूदकरु पपलीणु पपलीणु । ता गेण्ह गेण्ह । चिट्ठ चिट्ठ । दूलात्पदिट्ठो सि । (च)

(प्रविश्यापटीक्षेपेण संभ्रान्तः)

**संवाहकः**—हीमाणहे । कट्टे एशे जुदिअलभावे ।

णवबन्धणमुक्काए विअ
गद्दहीए हा ताडिदो म्हि गद्दहीए ।

---

(क) अत एव ता मधुकर्य उच्यन्ते ।

(ख) आर्ये, यदि स मनीषितस्तत्किमर्थमिदानीं सहसा नाभिसार्यते ।

(ग) चेटि, सहसाभिसार्यमाणः प्रत्युपकारदुर्बलतया, मा तावत्, जनो दुर्लभदर्शनः पुनर्भविष्यति ।

(घ) किमत एव सोऽलंकारस्तस्य हस्ते निक्षिप्तः ।

(ङ) चेटि, सुष्ठु त्वया ज्ञातम् ।

(च) अरे भट्टारक, दशसुवर्णस्य रुद्धो द्यूतकरः प्रपलायितः प्रपलायितः । तद्गृहाण गृहाण । तिष्ठ तिष्ठ । दूरात्प्रदृष्टोऽसि ।

---

श्रोत्रियः, तर्कतन्त्रप्रवीणः, पूजनीयः, न काम्यो विलासवैमुख्यादित्याशयः ॥ महुअरीओ इति । मधु कुर्वन्ति सेवन्ते । मत्ता इत्यर्थः ॥ भट्टेति द्यूतकरस्य संबोधनम् । दशसुवर्णकृते लुद्धु रुद्धः । पपलीणु प्रपलायितः । दश सुवर्णा लभ्या यस्य पार्श्वे स द्यूतकरः प्रपलायितः । अतो गृहाण धारय । तिष्ठ तिष्ठ । दूरादेव दृष्टोऽसि । सभ्यानुद्दिश्य ब्रूते । 'लब्धः' इति पाठे दशसुवर्णानां द्यूतकरो लब्धः । प्रपलायित इत्यर्थः॥ हीमाणहे इति विस्मये । कष्ट एष द्यूतकरभावः । **णवबन्ध-**

अङ्गलाअमुक्काए विअ शत्तीए
घडुक्को विअ घादिदो म्हि शत्तीए ॥ १ ॥
लेखअवावडहिअअं शहिअं दट्ठूण झत्ति पब्भट्ठे ।
एण्हिं मग्गणिवडिदे कं णु क्खु शलणं पपज्जे ॥ २ ॥

ता जाव एदे शहिअजूदिअला अण्णदो मं अण्णेशन्ति, ताव हक्के विप्पडीवेहिं पादेहिं एदं शुण्णदेउलं पविशिअ देवी भविश्शम् । (क)

(बहुविधं नाट्यं कृत्वा तथा स्थितः ।)

(ततः प्रविशति माथुरो द्यूतकरश्च ।)

**माथुरः**—अले भट्टा, दशसुवण्णाह लुद्धु जूदकरु पपलीणु पपलीणु । ता गेण्ह गेण्ह । चिट्ठ चिट्ठ । दूरात्पदिट्टो सि । (ख)

---

(क) आश्चर्यम् । कष्ट एष द्यूतकरभावः ।
नवबन्धनमुक्तयेव
गर्दभ्या हा ताडितोऽस्मि गर्दभ्या ।
अङ्गराजमुक्तयेव शक्त्या
घटोत्कच इव घातितोऽस्मि शक्त्या ॥
लेखकव्यापृतहृदयं सभिकं दृष्ट्वा झटिति प्रभ्रष्टः ।
इदानीं मार्गनिपतितः कं नु खलु शरणं प्रपद्ये ॥

तद्यावदेतौ सभिकद्यूतकरावन्यतो मामन्विष्यतः, तावदहं विपरीताभ्यां पादाभ्यामेतच्छून्यदेवकुलं प्रविश्य देवी भविष्यामि ।

(ख) अरे भट्टारक, दशसुवर्णस्य रुद्धो द्यूतकरः प्रपलायितः प्रपलायितः । तद्गृहाण गृहाण । तिष्ठ तिष्ठ । दूरात्प्रदृष्टोऽसि ।

---

**णेत्यादि** । चित्रजातिः । गद्दहीति गर्दभीनामधेय्या । हा कष्टम् । ताडितोऽस्मि । गद्दहीति वराटिकानाम । गर्दभीशक्तिके आर्थी इति प्रसिद्धद्यूतके कपर्दकनामधेये । नवबन्धनान्मुक्तयेव गर्दभ्या पशुविशेषेण ताडितोऽस्मि गर्दभ्या । ताडनस्वभावा सा यतः । अङ्गराजेन कर्णेन मुक्तयेव शक्त्या अस्त्रविशेषेण घटोत्कचो भीमसेनसुत इव ताडितोऽस्मि शक्त्या ॥ १ ॥ **लेखएत्यादि** गाथा । लेखकव्यापृतहृदयं सभिकं दृष्ट्वा झटिति प्रभ्रष्टः । इदानीं मार्गनिपतितः कं नु खलु शरणं प्रपद्ये । कं नु खल्विति विमर्षे ॥ २ ॥ तद्यावदेतौ सभिकद्यूतकरौ मामन्यतोऽन्विष्यतस्तावत् । हक्के अहम् । विपरीतपादाभ्यामेतच्छून्य

द्यूतकरः—

जइ वज्जसि पादालं इन्दं शलणं च संपदं जासि ।
सहिअं वज्जिअ एक्कं रुद्दो वि ण रक्खिदुं तरइ ॥ ३ ॥ (क)

माथुरः—

कहिं कहिं सुसहिअविप्पलम्भआ
पलासि ले भअपलिवेविदङ्गआ ।
पदे पदे समविसमं खलन्तआ
कुलं जसं अदिकसणं कलेन्तआ ॥ ४ ॥ (ख)

द्यूतकरः—(पदं वीक्ष्य ।) एसो वज्जदि । इअं पणट्ठा पदवी । (ग)

माथुरः—(आलोक्य सवितर्कम् ।) अले, विप्पदीवु पादु । पडिमाशुण्णु देउलु । (विचिन्त्य ।) धुत्तु जूदकरु विप्पदीवेहिं पादेहिं देउलं पविट्ठो । (घ)

---

(क) यदि व्रजसि पातालमिन्द्रं शरणं च सांप्रतं यासि ।
सभिकं वर्जयित्वैकं रुद्रोऽपि न रक्षितुं तरति ॥

(ख) कुत्र कुत्र सुसभिकविप्रलम्भक
पलायसे रे भयपरिवेपिताङ्गक ।
पदे पदे समविषमं स्खल-
न्कुलं यशोऽतिकृष्णं कुर्वन् ॥

(ग) एष व्रजति । इयं प्रनष्टा पदवी ।

(घ) अरे, विप्रतीपौ पादौ । प्रतिमाशून्यं देवकुलम् । धूर्तो द्यूतकरो विप्रतीपाभ्यां पादाभ्यां देवकुलं प्रविष्टः ।

---

देवकुलं प्रविश्य देवी भविष्यामि । देवीति च्व्यन्तम् ॥ **जइ बज्जसीत्यादि ।** आर्या । यदि गच्छसि पातालमिन्द्रं शरणं च सांप्रतं यासि । सभिकं वर्जयित्वैकं रुद्रोऽपि न रक्षितुं शक्नोति ॥ ३ ॥ **कहिं कहिमित्यादि ।** रुचिरा वृत्तम् । कुत्र कुत्र सुसभिकविप्रलम्भक पलायसे रे भयपरिवेपमानाङ्गक । पदे पदे समविषमं यथा स्यादेवं स्खलन्कुलं यशश्चातिकृष्णं कुर्वन् ॥ ४ ॥ भट्टा भट्टेत्यन्योन्यसंबोधनम् (?) । अरे, विप्रतीपपादशून्यं देवकुलम् । प्रयोजनाभावेन नात्र मानुष इति भावः । 'धूर्तो द्यूतकरो विप्रतीपाभ्यां पादाभ्यां देवकुलं प्रविष्टः' इत्येके । धूर्तो

**द्यूतकरः**—ता अणुसरेम्ह । (क)

**माथुरः**—एव्वं भोदु । (ख)

(उभौ देवकुलप्रवेशं निरूपयतः । दृष्ट्वान्योन्यं संज्ञाप्य ।)

**द्यूतकरः**—कधं कट्ठमयी पडिमा । (ग)

**माथुरः**—अले, णहु णहु । शैलपडिमा। (इति बहुविधं चालयति । संज्ञाप्य च ।) एव्वं भोदु । एहि । जूदं किलेम्ह । (घ) (इति बहुविधं द्यूतं क्रीडति ।)

**संवाहकः**—(द्यूतेच्छाविकारसंवरणं बहुविधं कृत्वा स्वगतम् ।) अले,

कत्ताशद्दे णिण्णाणअश्श हलइ हडकं मनुश्शश्श ।
ढक्काशद्दे व्व णडाधिवश्श पब्भट्टलज्जश्श ॥ ५ ॥
जाणामि ण कीलिश्शं शुमेलुशिहलपडणशण्णिहं जूअम् ।
तह वि हु कोइलमहुले कत्ताशद्दे मणं हलदि ॥ ६ ॥ (ङ)

---

(क) ततोऽनुसरावः ।

(ख) एवं भवतु ।

(ग) कथं काष्ठमयी प्रतिमा ।

(घ) अरे, न खलु न खलु । शैलप्रतिमा । एवं भवतु । एहि । द्यूतेन क्रीडावः ।

(ङ) अरे,

कत्ताशब्दो निर्नाणकस्य हरति हृदयं मनुष्यस्य ।
ढक्काशब्द इव नराधिपस्य प्रभ्रष्टराज्यस्य ॥
जानामि न क्रीडिष्यामि सुमेरुशिखरपतनसंनिभं द्यूतम् ।
तथापि खलु कोकिलमधुरः कत्ताशब्दो मनो हरति ॥

---

द्यूतकरो विप्रतीपपादाभ्यां देवकुलं प्रविष्टः ॥ ततोऽनुसरावः ॥ संज्ञापनं प्रतिमायाम् ॥ [कत्तेति ।] द्यूतकरणं यया सा कत्ता । काड इति प्रसिद्धः । नान्दीपूर इति प्रसिद्धे । द्यूत इत्यन्ये (?) । कत्ताशब्दो निर्नाणकस्य निर्धनस्य हरति पातयति हृदयं मनुष्यस्य । ढक्काशब्द इव नराधिपस्य प्रभ्रष्टराज्यस्य । असात्विका इत्यर्थः ॥ ५ ॥ जानामि न क्रीडिष्यासि सुमेरुशिखरपतनसंनिभं द्यूतम् । सुखविनाशकमित्यर्थः । तथापि खलु कोकिलमधुरः कत्ताशब्दो मनो हरति ॥ ६ ॥

द्यूतकरः—मम पाठे, मम पाठे । (क)

माथुरः—ण हु । मम पाठे, मम पाठे । (ख)

संवाहकः—(अन्यतः सहसोपसृत्य ।) णं मम पाठे । (ग)

द्यूतकरः—लद्धे गोहे । (घ)

माथुरः—(गृहीत्वा ।) अले पेदण्डा, गहीदो, सि । पअच्छ तं दशसुवण्णम् । (ङ)

संवाहकः—अज्ज दइश्शम् । (च)

माथुरः—अहुणा पअच्छ । (छ)

संवाहकः—दइश्शम् पशादं कलेहि । (ज)

माथुरः—अले, णं संपदं पअच्छ । (झ)

संवाहकः—शिलु पडदि । (ञ) (इति भूमौ पतति ।)

(उभौ बहुविधं ताडयतः ।)

माथुरः—एसु तुमं हु जूदिअरमण्डलीए बद्धो सि । (ट)

संवाहकः—(उत्थाय सविषादम् ।) कधं जूदिअलमण्डलीए ब-

---

(क) मम पाठे, मम पाठे ।

(ख) न खलु । मम पाठे मम पाठे ।

(ग) ननु मम पाठे ।

(घ) लब्धः पुरुषः ।

(ङ) अरे लुप्तदण्डक, गृहीतोऽसि । प्रयच्छ तद्दशसुवर्णम् ।

(च) अद्य दास्यामि ।

(छ) अधुना प्रयच्छ ।

(ज) दास्यामि । प्रसादं कुरु ।

(झ) अरे, ननु सांप्रतं प्रयच्छ ।

(ञ) शिरः पतति ।

(ट) एष त्वं खलु द्यूतकरमण्डल्या बद्धोऽसि ।

---

मम पाठ इत्यार्थी द्यूतकरोक्तिविशेषः ॥ गोहे पुरुषः मनुष्यः ॥ प्रेदण्डा लुप्तदण्डक । उभे अपि देशी ॥ अधुना प्रयच्छ ॥ दास्यामि ॥ शिलु पडदि शिरः पतति । भ्रमतीत्यर्थः । इति भूमौ निपत्य स्थितः ॥ एष त्वं खलु द्यूतकरमण्डल्या

द्धो म्हि । ही, एशे अम्हाणं जूदिअलाणं अलङ्घणीए शमए । ता कुदो दइश्शम् । (क)

माथुरः—अले, गण्डे कुलु कुलु । (ख)

संवाहकः—एव्वं कलेमि । (द्यूतकरमुपस्पृश्य ।) अद्धं ते देमि, अद्धं मे मुञ्चदु । (ग)

द्यूतकरः—एव्वं भोदु । (घ)

संवाहकः—(सभिकमुपगम्य ।) अद्धश्श गण्डे कलेमि । अद्धं पि मे अज्जो मुञ्चदु । (ङ)

माथुरः—को दोसु । एव्वं भोदु । (च)

संवाहकः—(प्रकाशम् ।) अज्ज, अद्धे तुए मुक्के । (छ)

माथुरः—मुक्के । (ज)

संवाहकः—(द्यूतकरं प्रति ।) अद्धे तुए वि मुक्के । (झ)

द्यूतकरः—मुक्के । (ञ)

---

(क) कथं द्यूतकरमण्डल्या बद्धोऽस्मि । कष्टम्, एषोऽस्माकं द्यूतकराणामलङ्घनीयः समयः । तस्मात्कुतो दास्यामि ।

(ख) अरे, गण्डः क्रियतां क्रियताम् ।

(ग) एवं करोमि । अर्धं तुभ्यं ददामि, अर्धं मे मुञ्चतु ।

(घ) एवं भवतु ।

(ङ) अर्धस्य गण्डं करोमि । अर्धमपि म आर्यो मुञ्चतु ।

(च) को दोषः । एवं भवतु ।

(छ) आर्य, अर्धं त्वया मुक्तम् ।

(ज) मुक्तम् ।

(झ) अर्धं त्वयापि मुक्तम् ।

(ञ) मुक्तम् ।

---

बद्धः ॥ ही कष्टम् । अस्माभिः सर्वैः समय उल्लङ्घयते । एषोऽस्माकं द्यूतकराणामलङ्घ्यः समयः ॥ 'गण्डं गण्डो लग्नकः' इति पूर्वटीका ॥ एवं करोमि । मुञ्च ॥ अर्धं सभिकेन मुक्तम् । अर्धं द्यूतकरेण । उभाभ्यां राशिरेव मुक्तः । इति मु-

**संवाहकः**—संपदं गमिश्शम् । (क)

**माथुरः**—पअच्छ तं दशसुवण्णम्, कहिं गच्छसि । (ख)

**संवाहकः**—पेक्खध पेक्खध भट्टालआ । हा, संपदं ज्जेव एक्काह अद्धे गण्डे कडे, अवलाह अद्धे मुक्के । तहवि मं अबलं शंपदं ज्जेव मग्गदि । (ग)

**माथुरः**—(गृहीत्वा ।) धुत्त, माथुरु अहं णिउणु । एत्थ तुए ण अहं धुत्तिज्जामि । ता पअच्छ तं पेदण्डआ, सव्वं सुवण्णं संपदम् । (घ)

**संवाहकः**—कुदो दइश्शम् । (ङ)

**माथुरः**—पिदरु विक्किणिज्ज पअच्छ । (च)

**संवाहकः**—कुदो मे पिदा । (छ)

**माथुरः**—मातरु विक्किणिज्ज पअच्छ । (ज)

---

(क) सांप्रतं गमिष्यामि ।

(ख) प्रयच्छ तं दशसुवर्णम् । कुत्र गच्छसि ।

(ग) प्रेक्षध्वं प्रेक्षध्वं भट्टारकाः । हा, सांप्रतमेव एकस्यार्धे गण्डः कृतः, अपरस्यार्धे मुक्तम् । तथापि मामबलं सांप्रतमेव याचते ।

(घ) धूर्त, माथुरोऽहं निपुणः । अत्र नाहं धूर्तयामि । तत्प्रयच्छ तं लुप्तदण्डक, सर्वं सुवर्णं सांप्रतम् ।

(ङ) कुतो दास्यामि ।

(च) पितरं विक्रीय प्रयच्छ ।

(छ) कुतो मे पिता ।

(ज) मातरं विक्रीय प्रयच्छ ।

---

क्तदेयत्वाद्यामीति ब्रूते ॥ भट्टारका इति मध्यस्थान्संबोधयति । सांप्रतमेव एक्काह एकस्य । अद्धे अर्धेन । गण्डे कडे । एकस्य सभिकस्यार्धे गण्डः कृतः । द्यूतकरापेक्षितार्धेन द्यूतकरे व(च?) लग्नकः । अपराह अद्धेण मुक्के इत्यपरस्य द्यूतकरस्यार्धेन मुक्तोऽस्मि । तच्च सभिकेनैवोपेक्षितम् ॥ अत्र माथुरोऽहं निपुणः । एत्थ तुए अत्र त्वया । धुत्तिज्जामि धूर्तै(र्यै) प्रतार्ये । पेदण्डा लुप्तदण्डक ॥ कुत इति लाभोपायप्रश्ने । पिदरु विक्कीणिज्ज पयच्छ पितरं विक्रीय प्रयच्छ ॥ मातरु विक्कीणिज्ज

**संवाहकः**—कुदो मे मादा । (क)

**माथुरः**—अप्पाणं विक्किणिअ पअच्छ । (ख)

**संवाहकः**—कलेध पशादम् । णेध मं लाजमग्गम् । (ग)

**माथुरः**—पसरु । (घ)

**संवाहकः**—एव्वं भोदु । (परिक्रामति ।) अज्जा, क्किणिध मं इमश्श शहिअश्श हत्थादो दशेहिं शुवण्णकेहिं । (दृष्ट्वा आकाशे ।) किं भणाध—'किं कलइश्शशि' त्ति । गेहे दे कम्मकले हुविश्शम् । कधम् । अदइअ पडिवअणं गदे । भोदु एव्वम् । इमं अण्णं भणइस्सम् । (पुनस्तदेव पठति ।) कधम् । एशे वि मं अवधीलिअ गदे । हा, अज्जचालुदत्तस्स विहवे विहडिदे एशे वट्टामि मन्द-भाए । (ङ)

**माथुरः**—णं देहि । (च)

**संवाहकः**—कुदो दइश्शम् । (छ) (इति पतति ।)

---

(क) कुतो मे माता ।

(ख) आत्मानं विक्रीय प्रयच्छ ।

(ग) कुरुत प्रसादम् । नयत मां राजमार्गम् ।

(घ) प्रसर ।

(ङ) एवं भवतु । आर्याः, क्रीणीध्वं मामस्य सभिकस्य हस्ताद्दशभिः सुवर्णकैः । किं भणत—'किं करिष्यसि' इति । गेहे ते कर्मकरो भविष्यामि । कथम् । अदत्त्वा प्रतिवचनं गतः । भवत्वेवम् । इममन्यं भणिष्यामि । कथम् । एषोऽपि मामवधीर्य गतः । हा, आर्यचारुदत्तस्य विभवे विघटिते एष वर्ते मन्दभाग्यः ।

(च) ननु देहि ।

(छ) कुतो दास्यामि ।

---

मातरं विक्रीय ॥ कलेध कुरुत । णेध नयत । [मं] माम् । राजमार्गम् ॥ पसरु प्रसर्प । क्किणिध क्रीणीध्वम् । सहिअस्स हत्थादो सभिकस्य पार्श्वादित्यर्थः । असौ तव कर्मकरो भविष्यामि । हा आर्यचारुदत्तस्य विभवे विघटिते तस्मिन्निर्धने एष एतादशाव-

(माथुरः कर्षति ।)

**संवाहकः**—अज्जा, पलित्ताअध पलित्ताअध । (क)

(ततः प्रविशति दर्दुरकः ।)

**दर्दुरकः**—भोः, द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम् ।

न गणयति पराभवं कुतश्चि-
द्धरति ददाति च नित्यमर्थजातम् ।
नृपतिरिव निकाममायदर्शी
विभववता समुपास्यते जनेन ॥ ७ ॥

अपि च ।

द्रव्यं लब्धं द्यूतेनैव दारामित्रं द्यूतेनैव ।
दत्तं भुक्तं द्यूतेनैव सर्वं नष्टं द्यूतेनैव ॥ ८ ॥

अपि च ।

त्रेता हृतसर्वस्वः पावरपतनाच्च शोषितशरीरः ।
नर्दितदर्शितमार्गः कटेन विनिपातितो यामि ॥ ९ ॥

(अग्रतोऽवलोक्य ।) अयमस्माकं पूर्वसभिको माथुर इत एवाभिवर्तते । भवतु । अपक्रमितुं न शक्यते । तदवगुण्ठयाम्यात्मानम् ।

(बहुविधं नाट्यं कृत्वा स्थितः । उत्तरीयं निरीक्ष्य ।)

अयं पटः सूत्रदरिद्रतां गतो
ह्ययं पटश्छिद्रशतैरलंकृतः ।
अयं पटः प्रावरितुं न शक्यते
ह्ययं पटः संवृत एव शोभते ॥ १० ॥

अथवा किमयं तपस्वी करिष्यति । यो हि

---

(क) आर्याः, परित्रायध्वं परित्रायध्वम् ।

---

स्थो वर्ते मन्दभाग्यः ॥ **नेति** । अतिशयमायस्य दर्शको राजेवेश्वरेणापि पुरुषेण सेव्यते ॥७॥ **द्रव्यं लब्धमित्यादि** । विद्युन्माला ॥८॥ **त्रेतेति** । त्रेता 'तीया' इति प्रसिद्धः । पावरो 'दूआ' इति ख्यातः । नर्दितो 'नान्दी' इति प्रसिद्धः । कटेन 'पूरा' इति प्रसिद्धेन । 'पावरः पूरा, कटो दूआ' इति केचित् ॥९॥ **अयमिति** ॥१०॥

पादेनैकेन गगने द्वितीयेन च भूतले ।
तिष्ठाम्युल्लम्बितस्तावद्यावत्तिष्ठति भास्करः ॥ ११ ॥

**माथुरः**—दापय दापय । (क)

**संवाहकः**—कुदो दइश्शम् । (ख)

(माथुरः कर्षति ।)

**दर्दुरकः**—अये, किमेतदग्रतः । (आकाशे ।) किं भवानाह—'अयं द्यूतकरः सभिकेन खलीक्रियते, न कश्चिन्मोचयति ।' इति नन्वयं दर्दुरो मोचयति । (उपसृत्य ।) अन्तरमन्तरम् । (दृष्ट्वा ।) अये कथं माथुरो धूर्तः । अयमपि तपस्वी संवाहकः ।

यः स्तब्धं दिवसान्तमानतशिरा नास्ते समुल्लम्बितो
यस्योद्धर्षणलोष्टकैरपि सदा पृष्ठे न जातः किणः ।
तस्यैतच्च न कुक्कुरैरहरहर्जङ्घान्तरं चर्व्यते
तस्यात्यायतकोमलस्य सततं द्यूतप्रसङ्गेन किम् ॥ १२ ॥

भवतु । माथुरं तावत्सान्त्वयामि । (उपगम्य ।) माथुर, अभिवादये

(माथुरः प्रत्यभिवादयते ।)

**दर्दुरकः**—किमेतत् ।

**माथुरः**—अअं दशसुवण्णं धालेदि । (ग)

**दर्दुरकः**—ननु कल्यवर्तमेतत् ।

**माथुरः**—(दर्दुरस्य कक्षतललुण्ठीकृतं पटमाकृष्य ।) भट्टा, पश्शत

---

(क) दापय दापय ।
(ख) कुतो दास्यामि ।
(ग) अयं दशसुवर्णं धारयति ।

---

तपस्वी वराकः ॥ **पादेनेति** ॥ ११ ॥ खलीक्रियते भर्त्स्यते । अन्तरमन्तरमिति जनसंमर्दे प्रवेशायावकाशप्रार्थना । **य इति** । उद्धर्षणः संघर्षणः किणः 'घाटिः' इति प्रसिद्धः । यच्छरैर्लगुणैण्यत्ते (?) । 'कुक्कुरैश्चर्व्यते' इति पाठो व्यक्त एव । न ध्यायतो न निःशेषयतः (?) । अत्यायतो विपुलशरीरः । तथा कोमलस्य । 'व्यायतो कृतश्रमः' इति पूर्वटीका ॥१२॥ कल्यवर्त्तं प्रातर्भोजनम् । तत्सा धनमेतद्द्रव्यमिदमित्यर्थः । जीर्णपटसंवृतः (?) ॥ कटकरणेन प्रयच्छामि तत्रार्थः—

पश्शत । जज्जरपडप्पावुदो अअं पुलिसो दशसुवण्णं कल्लवत्तं भणादि । (क)

**दर्दुरकः**—अरे मूर्ख, नन्वहं दशसुवर्णान्कटकरणेन प्रयच्छामि । तत्किं यस्यास्ति धनं स किं क्रोडे कृत्वा दर्शयति । अरे,

दुर्वर्णोऽसि विनष्टोऽसि दशस्वर्णस्य कारणात् ।
पञ्चेन्द्रियसमायुक्तो नरो व्यापाद्यते त्वया ॥ १३ ॥

**माथुरः**—भट्टा, तुए दशसुवण्णु कल्लवत्तु । मए एसु विहवु । (ख)

**दर्दुरकः**—यद्येवम्, श्रूयतां तर्हि । अन्यांस्तावद्दश सुवर्णानस्यैव प्रयच्छ । अयमपि द्यूतं शीलयतु ।

**माथुरः**—तत्किं भोदु । (ग)

**दर्दुरकः**—यदि जेष्यति तदा दास्यति ।

**माथुरः**—अह ण जिणादि । (घ)

**दर्दुरकः**—तदा न दास्यति ।

**माथुरः**—अह ण जुत्तं जप्पिदुम् । एव्वं अक्खन्तो तुमं पयच्छ धुत्तआ । अहं पि णाम माथुरु धुत्तु जूदं मित्था आदंसआमि । अण्णस्स वि अहं ण बिभेमि । धुत्ता, खण्डिअवुत्तो सि तुमम् । (ङ)

---

(क) भर्तारः, पश्यत पश्यत । जर्जरपटप्रावृतोऽयं पुरुषो दशसुवर्णं कल्यवर्तं भणति ।

(ख) भर्तः, तव दशसुवर्णः कल्यवर्तः । ममैष विभवः ।

(ग) तत्किं भवतु ।

(घ) अथ न जयति ।

(ङ) अथ न युक्तं जल्पितुम् । एवमाचक्षाणत्वं प्रयच्छ धूर्तक । अहमपि

---

कल्यवत्तं कल्यं प्रातः वत्त वर्तय (?) । कटत्वेन देहीत्यर्थः । अत एव चाधुना देहि । तत्किमिति गृहादानयनादिनापि विनयः संभाव्यत इत्याशयः । **दुर्वर्णेति** ॥१३॥ भट्टा इति संबोधनोक्तिः । ममैष विभवः ॥ तदेवं सति किम् ॥ अथ न जयति । अथायं न दृढं भद्रं जयतु । पाठान्तरे तु—अह अथ । भद्रकं जन्यम् (?) ॥ एवमहं पत्तुआ धुत्तिज्जामि प्रतार्ये । अहमपि नाम मथुराभवो द्यूत-

दर्दुरकः—अरे, कः खण्डितवृत्तः ।

माथुरः—तुमं हु खण्डिअवुत्तो । (क)

दर्दुरकः—पिता ते खण्डितवृत्तः। (संवाहकस्यापक्रमितुं संज्ञां ददाति ।)

माथुरः—गोसाविआपुत्ता, एव्वं ज्जेव जूदं तुए सेविदम्। (ख)

दर्दुरकः—मयैवं द्यूतमासेवितम् ।

माथुरः—अले संवाहआ, पअच्छ तं दशसुवण्णम् । (ग)

संवाहकः—अज्ज दइश्शम् । दाव दइश्शम् । (घ)

(माथुरः कर्षति ।)

दर्दुरकः—मूर्ख, परोक्षे खलीकर्तुं शक्यते, न ममाग्रतः खलीकर्तुम् ।

(माथुरः संवाहकमाकृष्य घोणायां मुष्टिप्रहारं ददाति । संवाहकः सशोणित मूर्च्छां नाटयन्भूमौ पतति । दर्दुरक उपसृत्यान्तरयति । माथुरो दर्दुरं ताडयति। दर्दुरो विप्रतीपं ताडयति ।)

माथुरः—अले अले दुट्ट छिण्णालिआपुत्तअ, फलंपि पाविहसि । (ङ)

दर्दुरकः—अरे मूर्ख, अहं त्वया मार्गगत एव ताडितः । श्वो यदि राजकुले ताडयिष्यसि, तदा द्रक्ष्यसि ।

माथुरः—एसु पेक्खिस्सम्। (च)

दर्दुरकः—कथं द्रक्ष्यसि ।

---

नाम माथुरो धूर्तो द्यूतं मिथ्या दर्शयामि । अन्यस्मादप्यहं न बिभेमि । धूर्त, खण्डितवृत्तोऽसि त्वम् ।

(क) त्वं खलु खण्डितवृत्तः ।

(ख) वेश्यापुत्र, एवमेव द्यूतं त्वया सेवितम् ।

(ग) अरे संवाहक, प्रयच्छ तद्दशसुवर्णम् ।

(घ) अद्य दास्यामि । तावद्दास्यामि ।

(ङ) अरे अरे दुष्ट पुंश्चलीपुत्रक, फलमपि प्राप्स्यसि ।

(च) एष प्रेक्षिष्ये ।

---

करो द्यूतं मिथ्या दर्शयामि । अन्यस्मै च नाहं बिभेमि । अहमेवान्यं निर्भयः प्रतारयामि । न तु मामन्य इत्यर्थः । तेन त्वमपि धूर्तोऽसीति भावः॥ गोसाविआ

**माथुरः**—(प्रसार्य चक्षुषी ।) एव्वं पेक्खिस्सम् । (क)

(दर्दुरो माथुरस्य पांशुना चक्षुषी पूरयित्वा संवाहकस्यापक्रमितुं संज्ञां ददाति । माथुरोऽक्षिणी निगृह्य भूमौ पतति । संवाहकोऽपक्रामति ।)

**दर्दुरकः**—(स्वगतम् ।) प्रधानसभिको माथुरो मया विरोधितः । तन्नात्र युज्यते स्थातुम् । कथितं च मम प्रियवयस्येन शर्विलकेन, यथा किल—'आर्यकनामा गोपालदारकः सिद्धादेशेन समादिष्टो राजा भविष्यति ।' इति । सर्वश्चास्मद्विधो जनस्तमनुसरति । तदहमपि तत्समीपमेव गच्छामि । (इति निष्क्रान्तः ।)

**संवाहकः**—(सत्रासं परिक्रम्य दृष्ट्वा ।) एशे कश्शवि अणपावुदपक्खदुआलके गुहे । ता एत्थ पविशिश्शम् । (प्रवेशं रूपयित्वा वसन्तसेनामालोक्य ।) अज्जे, शलणागदे म्हि । (ख)

**वसन्तसेना**—अभअं सरणागदस्स । हञ्जे, ढक्केहि पक्खदुआरअम् । (ग)

(चेटी तथा करोति ।)

**वसन्तसेना**—कुदो दे भअम् । (घ)

**संवाहकः**—अज्जे, धणिकादो । (ङ)

**वसन्तसेना**—हञ्जे, संपदं अवावुणु पक्खदुआरअम् । (च)

**संवाहकः**—(आत्मगतम् ।) कधं धणिकादो तुलिदं शे भअकालणम् । शुट्ठु क्खु एवं वुच्चदि ।

---

(क) एवं प्रेक्षिष्ये ।

(ख) एतत्कस्याप्यनपावृतपक्षद्वारकं गेहम् । तदत्र प्रविशामि । आर्ये, शरणागतोऽस्मि ।

(ग) अभयं शरणागतस्य । चेटि, पिधेहि पक्षद्वारकम् ।

(घ) कुतस्ते भयम् ।

(ङ) आर्ये, धनिकात् ।

(च) चेटि, सांप्रतमपावृणु पक्षद्वारकम् ।

---

चेश्या ॥ एतत्कस्याप्यपावृतपक्षद्वारं गेहम् ॥ ढक्केहि पिधेहि ॥ तुलिदमाकलि-

जे अत्तबलं जाणिअ भालं तुलिदं वहेइ माणुस्से ।
ताह खलणं ण जायदि ण अ कन्तालगदो विवज्जदि ॥ १४॥

एत्थ लक्खिदम्हि । (क)

**माथुरः**—(अक्षिणी प्रमृज्य द्यूतकरं प्रति ।) अले, देहि देहि । (ख)

**द्यूतकरः**—भट्टा, जावदेव अम्हे तद्दुरेण कलहायिदा तावदेव सो गोहो अवक्कन्तो । (ग)

**माथुरः**—तस्स जूदकलस्स मुट्ठिप्पहालेण णासिका भग्गा आसि । ता एहि । रुहिरपहं अणुसरेम्ह । (घ)

(अनुसृत्य)

**द्यूतकरः**—भट्टा, वसन्तसेणागेहं पविट्ठो सो । (ङ)

**माथुरः**—भूदाइं सुवण्णाइं । (च)

**द्यूतकरः**—लाअउलं गदुअ णिवेदेम्ह । (छ)

---

(क) कथं धनिकात्तुलितमस्या भयकारणम् । सुष्ठु खल्वेवमुच्यते ।
य आत्मबलं ज्ञात्वा भारं तुलितं वहति मनुष्यः ।
तस्य स्खलनं न जायते न च कान्तारगतो विपद्यते ॥
अत्र लक्षितोऽस्मि ।

(ख) अरे, देहि देहि ।

(ग) भर्तः, यावदेव वयं दर्दुरेण कलहायितास्तावदेव स पुरुषोऽपक्रान्तः ।

(घ) तस्य द्यूतकरस्य मुष्टिप्रहारेण नासिका भग्नासीत् । तदेहि । रुधिरपथमनुसरावः ।

(ङ) भर्तः, वसन्तसेनागृहं प्रविष्टः सः ।

(च) भूतानि सुवर्णानि ।

(छ) राजकुलं गत्वा निवेदयावः ।

---

तम् । **जे अत्तबलमित्यादि** । वैतालीयं छन्दः । यो(य) आत्मबलं ज्ञात्वा भारं तुलितं वहति मनुष्यः तस्य स्खलनं न जायते न च कान्तारगतो विपद्यते ॥ १४ ॥ तुलितं कलितमिति 'वा पदान्त–' इति बिन्दोर्लघुत्वम् । वसन्तसेनाया अशक्यविषये व्यापार उक्तः ॥ गोहे मनुष्यः ॥ तस्य दुरात्मनो मया मुष्टिप्रहारेण नासा भग्ना । तदागच्छतु चिरमेतदनुसरावः । एहि तावत् ॥ अदो

**माथुरः**—एसो धुत्तो अदो णिक्कमिअ अण्णत्त गमिस्सदि। ता उअरोधेणेव्व गेण्हेम्ह। (क)

(वसन्तसेना मदनिकायाः संज्ञां ददाति।)

**मदनिका**—कुदो अज्जो। को वा अज्जो। कस्स वा अज्जो। किं वा वित्तिं अज्जो उवजीअदि। कुदो वा भअम्। (ख)

**संवाहकः**—शुणादु अज्जआ। अज्जए, पाडलिउत्ते मे जम्मभूमी। गहवइदालके हगे। संवाहअश्श वित्तिं उवजीआमि। (ग)

**वसन्तसेना**—सुउमारा क्खु कला सिक्खिदा अज्जेण। (घ)

**संवाहकः**—अज्जए, कलेत्ति शिक्खिदा। आजीविआ दाणिं संवुत्ता। (ङ)

**चेटी**—अदिणिव्विण्णं अज्जेण पडिवअणं दिण्णम्। तदो तदो। (च)

**संवाहकः**—तदो अज्जए, एशे णिजगेहे आहिण्डकाणं मुहादो शुणिअ अपुव्वदेशदंशणकुदूहलेण इह आगदे। इहवि मए पविशिअ उज्जइणिं एक्के अज्जे शुश्शुशिदे। जे तालिशे पिअदंशणे पिअवादी, दइअ ण कित्तेदि, अवकिदं विशुमलेदि। किं बहुणा

---

(क) एष धूर्तोऽतो निष्क्रम्यान्यत्र गमिष्यति। तदुपरोधेनैव गृह्णीवः।

(ख) कुत आर्यः। को वार्यः। कस्य वार्यः। कां वा वृत्तिमार्य उपजीवति। कुतो वा भयम्।

(ग) शृणोत्वार्या। आर्ये, पाटलिपुत्रं मे जन्मभूमिः। गृहपतिदारकोऽहम्। संवाहकस्य वृत्तिमुपजीवामि।

(घ) सुकुमारा खलु कला शिक्षितार्येण।

(ङ) आर्ये, कलेति शिक्षिता। आजीविकेदानीं संवृत्ता।

(च) अतिनिर्विण्णमार्येण प्रतिवचनं दत्तम्। ततस्ततः।

---

अतः। निष्क्रम्यान्यत्र गमिष्यति। तदुपरोधेनैव गृह्णीमः॥ गृहपतेर्दारकोऽहम्। संवाहकस्य शरीरयन्त्र(मर्द)कस्य व्यापारमुपजीवामि॥ स्वगृहपर्यटकानां भिक्षुकादीनां वचनं श्रुत्वा। [अ]वकिदं उ(अ)पकृतं विस्मरति। किं

पलन्तेण । दक्खिणदाए पलकेलअं विअ अत्ताणअं अवगच्छदि, शलणागअवच्छले अ। (क)

**चेटी**—को दाणिं अज्जआए मणोरहन्तरस्स गुणाइं चोरिअ उज्जइणिं अलंकरेदि । (ख)

**वसन्तसेना**—साहु हञ्जे, साहु । मए वि एव्वं ज्जेव हिअएण मन्तिदम् । (ग)

**चेटी**—अज्ज, तदो तदो । (घ)

**संवाहकः**—अज्जए, शे दाणिं अणुक्कोशकिदेहिं पदाणेहिं । (ङ)

**वसन्तसेना**—किं उवरदविहवो संवुत्तो । (च)

**संवाहकः**—अणाचक्खिदे ज्जेव कधं अज्जआए विण्णादम् । (छ)

**वसन्तसेना**—किं एत्थ जाणीअदि । दुल्लहा गुणा विहवा अ । अपेएसु तडाएसु बहुदरं उदअं भोदि । (ज)

---

(क) तत आर्ये, एष निजगृह आहिण्डकानां मुखाच्छ्रुत्वापूर्वदेशदर्शनकुतूहलेनेहागतः । इहापि मया प्रविश्योज्जयिनीमेक आर्यः शुश्रूषितः । यस्तादृशः प्रियदर्शनः प्रियवादी, दत्त्वा न कीर्तयति, अपकृतं विस्मरति । किं बहुना प्रलपितेन । दक्षिणतया परकीयमिवात्मानमवगच्छति, शरणागतवत्सलश्च ।

(ख) क इदानीमार्याया मनोरथान्तरस्य गुणांश्चोरयित्वोज्जयिनीमलंकरोति ।

(ग) साधु चेटि, साधु । मयाप्येवमेव हृदयेन मन्त्रितम् ।

(घ) आर्य, ततस्ततः ।

(ङ) आर्ये, स इदानीमनुक्रोशकृतैः प्रदानैः ।

(च) किमुपरतविभवः संवृत्तः ।

(छ) अनाख्यातमेव कथमार्यया विज्ञातम् ।

(ज) किमत्र ज्ञातव्यम् । दुर्लभा गुणा विभवाश्च । अपेयेषु तडागेषु बहुतरमुदकं भवति ।

---

बहुना पलन्तेन प्रलपितेन ॥ मणोरहाहुत्तस्स मनोरथाभिमुखस्य ॥ अनुक्रोशः करुणा ॥ अणाचक्खिदे अनाख्यातम् । अपेयेषु तडागेषु बहुतरमुदकं भवति ।

**चेटी**—अज्ज, किंणामधेओ क्खु सो । (क)

**संवाहकः**—अज्जे, के दाणिं तश्श भूदलमिअङ्कस्स णामं ण जाणादि । शो क्खु शेट्ठिचत्तले पडिवशदि । शलाहणिज्जणामधेए अज्जचालुदत्ते णाम । (ख)

**वसन्तसेना**—(सहर्षमासनादवतीर्य ।) अज्जस्स अत्तणकेरकं एदं गेहम् । हञ्जे, देहि से आसणम् । तालवेण्ठअं गेण्ह । परिस्समो अज्जस्स बाधेदि । (ग)

(चेटी तथा करोति ।)

**संवाहकः**—(स्वगतम् ।) कधं अज्जचालुदत्तस्स णामशंकीत्तणेण ईदिशे मे आदले । शाहु अज्जचालुदत्तो, शाहु । पुहवीए तुमं एक्के जीवशि । शेषे उण जणे शशदि । (इति पादयोर्निपत्य ।) भोदु अज्जए, भोदु । आशणे णिशीददु अज्जआ । (घ)

**वसन्तसेना**—(आसने समुपविश्य ।) अज्ज, कुदो सो धणिओ । (ङ)

**संवाहकः**—

शक्कालधणे क्खु शज्जणे
काह ण होइ चलाचले धणे ।

---

(क) आर्य, किंनामधेयः खलु सः ।

(ख) आर्ये, क इदानीं तस्य भूतलमृगाङ्कस्य नाम न जानाति । स खलु श्रेष्ठिचत्वरे प्रतिवसति । श्लाघनीयनामधेय आर्यचारुदत्तो नाम ।

(ग) आर्यस्यात्मीयमेतद्गेहम् । चेटि, देह्यस्यासनम् । तालवृन्तकं गृहाण । परिश्रम आर्यस्य बाधते ।

(घ) कथमार्यचारुदत्तस्य नामसंकीर्तनेनेदृशो म आदरः । साधु आर्यचारुदत्त, साधु । पृथिव्यां त्वमेको जीवसि । शेषः पुनर्जनः श्वसिति । भवत्वार्ये, भवतु । आसने निषीदत्वार्या ।

(ङ) आर्य, कुतः स धनिकः ।

---

काक्वुक्त्या । अपि तु नैवेत्यर्थः ॥ **शक्कालधणे इत्यादि** । मात्रासमकम् । प्रतिपादं चलाचले, धणे, से इत्येकारत्रयं लघु । छन्दोनुरोधात् । सत्कारधनः

